कर्पूरवीटिकामास्ये ततोऽम्ब विनिवेशय ।
आनन्दोल्लासहासेन विलसन्मुखपङ्कजाम् ॥ २० ॥
भक्तिमत्कल्पलतिकां कृती स्यां त्वां स्मरन् कदा ।
मङ्गलारार्तिकं छत्रं चामरं दर्पणं तथा ॥ २१ ॥
तालवृन्तं गन्धपुष्पधूपदीपांश्च तेऽर्पये ।
श्रीकामेश्वरि ! तप्तहाटककृतैः स्थालीसहस्रैर्भृतम्
दिव्यान्नं घृतसूपशाकभरितं चित्रान्नभेदैर्युतम् ॥
दुग्धान्नं मधुशर्करादधियुतं माणिक्यपात्रार्पितं
माषापूपकपूरिकादिसहितं नैवेद्यमम्बाऽर्पये ॥ २२ ॥
साग्रविंशतिपद्योक्तचतुष्षष्ट्युपचारतः ।
हृन्मध्यनिलया माता ललिता परितुष्यतु ॥ २३ ॥

इति महायागक्रमोक्तं मानस पूजनम् ।

———

श्री षोडशानन्दनाथ ( करपात्र स्वामी )

संकलिता श्रीविद्यावरिवस्या

समाप्ता ।

तेन

कामेश्वराङ्क निलया श्रीललितामहात्रिपुरसुन्दरी तृप्यताम् ।